तुत्वादिति भावः । उदाहरणम्—

**दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।**
**विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥ ५६६ ॥**

स्पष्टम् । अत्र दृशैव दाहो जीवनं च । यद्यपि विरूपाक्षदृग्वामलोचनादृशोर्नैक्यम्, तथा च न व्याघातः, तथाऽप्येकजातीयत्वादैक्यं विवक्षित्वेदमुपपादनीयम् । यद्वा, कार्ये वैजात्यस्य कारणवैजात्यप्रयोज्यत्वादेकजातीयाद्विजातीयकार्याभिधाने व्याघात एवेति ध्येयम् ।

एवं शुद्धालङ्कारा दर्शिताः । अस्ति पुनः कश्चिद्विषयो, यत्रोर्मिकादिसम्बद्धशोणरत्नप्रमुखमणिमेलकवत्प्रोक्तानामलङ्काराणां संवलने एव चमत्कारः, अतः सोऽप्यलङ्कारः, तत्र द्वयी विधा, परस्परनिरपेक्षव्यवस्थितेस्तदभावाच्च । तत्राद्या संसृष्टिः । द्वितीया तु सङ्कर इति प्रकारचतुष्टयं लक्षयति—

सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥ १३९ ॥

**एतेषां समनन्तरमेवोक्तस्वरूपाणां यथासम्भवमन्योन्यनिरपेक्षतया यत् एकत्र ( शब्दभागे एव, अर्थविषये एव उभयत्रापि वा ) अवस्थानम्, सा (एकार्थसमवायस्वभावा ) संसृष्टिः ।**

एतेषामित्यादि । भेदः—स्वरूपतो विषयतो वा परस्परानपेक्षत्वम् । यद्वा, विषयभेदे सति परस्परानपेक्षत्वम् । स्थितिर्व्यवस्थितिः । एतेषां समनन्तरमेवोक्तानामलङ्काराणां भेदेन यत्स्थितिः सा संसृष्टिरिष्टा । सङ्करभेदास्तु नैवम् । अङ्गाङ्गिभावे स्वरूपतः सापेक्षत्वात्, अनिश्चये व्यवस्थितेरेवाभावात्, व्यवस्थिते विषयतः परापेक्षत्वात्, विषयाभेदाच्च । सेयं (संसृष्टिः) शब्दालङ्कारमात्रस्यार्थालङ्कारमात्रस्य शब्दार्थालङ्कारयोर्वेति

त्रिप्रकारेत्यर्थः। तत्राद्या यथा—

तत्र शब्दालङ्कारसंसृष्टिर्यथा—

वदनसौरभलोभपरिभ्रमद्-
भ्रमरसम्भ्रमसम्भृतशोभया।
चलितया विदधे कलमेखला-
कलकलोऽलकलोलदृशाऽनया॥ ५६७॥

वदने यत्सौरभं पद्मिनीत्वेनाद्भुतसौगन्ध्यं तस्य लोभेन परि-तो भ्रमन्तः ये भ्रमरास्तेषां सम्भ्रमो-भयं तेन सम्भृतोपचिता शोभा यस्यास्तथाभूतयाऽत एव चलितया, अलकै लोले-चञ्चले दृशावक्षिणी यस्यास्तादृश्या अनया-कयाचिन्नायिकया कला मधुराऽव्यक्ता या मेखला तस्याः कलकलः-कोलाहलः विदधे अकारीत्यर्थः। द्रुतविलम्बितं वृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात्। अत्रानुप्रासयमकयोः परस्परमनपेक्ष्य व्यवस्थितिः। द्वितीया यथा—

अर्थालङ्कार संसृष्टिस्तु—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता॥ ५६८॥

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः, उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे।

व्याख्यातं प्राक्। अत्रोत्प्रेक्षोपमे परस्परमनपेक्ष्य व्यवस्थिते संसृष्टिं प्रयोजयतः। अन्त्या यथा—

शब्दार्थालङ्कारयोस्तु संसृष्टिः—

सो णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णम्।
तरुणाण हिअअलूडिं परिसक्कन्तीं णिवारेइ॥ ५६९॥

आर्या।

**अत्रानुप्रासो रूपकं चान्योन्यानपेक्षे संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात् ।**

स नास्ति अत्र ग्रामे य एनां महमहल्लावण्याम् ।
तरुणानां हृदयलुण्टाकीं परिष्वक्कमाणां निवारयति ॥

इति संस्कृतम् । महमहल्लावण्यां-नवनवीभवल्लावण्या परिसकन्तीं-स्वानुरूपरमणाभावादितस्ततो गच्छन्तीं निवारयति-पुरुषान्तराद्व्यावर्त्तयति । स्फुटमन्यत् ।

अत्रेत्यादि । अत्रानुप्रासरूपकौ शब्दार्थालङ्कारौ । नन्वनयोः शब्दार्थरूपाश्रयभेदेन कथमेकार्थसमवायलक्षणा संसृष्टिरिति चेत्, एकत्रवाक्ये छन्दसि वा समवेतत्वादित्यर्थः ।

**अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः ।**

**एते एव यत्रात्मनि अनासादितस्वतन्त्रभावाः परस्परं अनुग्राह्यानुग्राहकतां दधति, स ( एषां सङ्कीर्यमाणस्वरूपत्वात् ) सङ्करः । उदाहरणम्—**

एत एवेत्यादि । अविश्रान्तीत्यस्य विवरणमनासादितस्वतन्त्रभावा इति । अङ्गाङ्गित्वमनुग्राह्यानुग्राहकभावः । यत्तु श्रीवत्सलाञ्छनभट्टाचार्यैरुक्तम्-स्वातन्त्र्यं चेतरसजातीयासहकारेण चमत्कारासाधारणप्रयोजकत्वम् इति । तन्न रमणीयम् । एतादृशस्वातन्त्र्यास्याङ्गिभूतालङ्कारे जागरूकत्वात्, किन्तु स्वातन्त्र्यमन्यनिरपेक्षत्वमेव । अन्यापेक्षा चाङ्गस्य चारुत्वार्थम्, अङ्गिनस्तु स्वरूपसिद्ध्यर्थम् । अत एवाङ्गाङ्गिभावः सङ्गच्छते -इति तत्त्वम् । एवं चोक्तानामेवालङ्काराणां चारुत्वार्थं स्वरूपनिष्पत्तये वाऽन्यापेक्षणादात्मन्यनासादितस्वतन्त्रभावानां यत्परस्परमनुग्राह्यानुग्राहकत्वं स तु सङ्करः, सङ्कीर्यमाणस्वरूप-

त्वादित्यर्थः । उदाहरणम्—

आत्ते सीमन्तचिह्ने मरकतिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन् गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ५।७०

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतम्, तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृत्तिनिमित्तमित्यनयोरङ्गाङ्गिभावः ।

हे राजन् शबराः—भिल्लाः अरण्ये—निर्जने वने इत्वरीणां पलाय्य गच्छन्तीनां त्वदरिमृगदृशां मरकतं—गारुत्मतमस्यास्तीति मरकति तस्मिन् मरकतिनि सीमन्तचिन्हे—केशपाशभूषणे गृहीते सति मेखलायां—क्षुद्रघण्टिकायां लुप्तायां—छिन्नायां सत्यां 'ल्लुप्लृ च्छेदने' इति धातुः । झटिति-शीघ्र मणितुलाकोटियुग्मे रत्नजटितपादकटकद्वये गृहीते सति । बिम्बोष्ठकान्त्या शोणं—रक्तं हारं—मुक्तादाम गुञ्जाफलानां स्रज इति बुद्ध्या नैव हरन्तीत्यर्थः । स्रग्धरा छन्दः । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात् ।

अत्रेत्यादि । अत्र बिम्बोष्ठकान्त्या शोणमिति तद्गुणमपेक्ष्य 'गुञ्जाफलानां स्रज' इति भ्रान्तिमानात्मानं लभते, तद्गुणोऽप्यत्र न स्वातन्त्र्येण चमत्कारविशेषं करोति, किन्तु भ्रान्तिमदपेक्षयैवेति परस्परमनुग्राह्यानुग्राहकभाव इत्याशयः । अत्र द्वयोरलङ्कारयोः सङ्करः । बहूनामपि यथा—

यथा वा—

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः ।

परिप्रेङ्खत्तारापरिकरकपालाङ्कितलले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥५७१॥

उपमा रूपकम् उत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववत् अङ्गाङ्गितया प्रतीयन्ते ।

कलङ्क एवाक्षवलयमिति रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते, अस्य हि रूपकत्वे तिरोहितकलङ्करूपम् अक्षवलयमेव मुख्यतयाऽवगम्यते, तस्यैव च करग्रहणयोग्यतायां सार्वत्रिकी प्रसिद्धिः, श्लेषच्छायया तु कलङ्कस्य करधारणम् असदेव प्रत्यासत्त्या उपचर्य योज्यते, शशाङ्केन केवलं कलङ्कस्य मूर्त्यैवोद्वहनात्, कलङ्कोऽक्षवलयमिवेति तु उपमायां कलङ्कस्य उत्कटतया प्रतिपत्तिः, न चास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात् ।

भाभिरित्युपलक्षणे तृतीया, करो–रश्मिः पाणिश्च, वियोगिनो–विरहिणः विगतयोगाभ्यासश्च, व्यापत्तिर्मरणं चन्द्रदर्शनात् तत्त्वज्ञानाभावाच्च वैराग्यं–रक्तपीतादिरागत्यागाद्विगतरागिता विषयव्यावृत्तिश्च, विशदः–पाण्डुरः शुद्धचित्तश्च तलं–स्वरूपम् 'अधःस्वरूपयोरस्त्री तलम्' इत्यमरः । भस्मना पाण्डुर्भस्मेव पाण्डुश्च । स्पष्टमन्यत् ।

उपमेत्यादि । अत्र जटाभाभिर्भाभिरिति पितृवन इव व्योम्नीति चोपमा । कलङ्काक्षवलयेति तारापरिकरकपालेति च रूपकम् । वियोगिव्यापत्तेरिवेत्युत्प्रेक्षा, वैराग्यविशद इति श्लेषः, चत्वारोऽप्येते परस्परमङ्गाङ्गिभावेन प्रतीयन्ते । तत्रोत्प्रेक्षा श्लेषाङ्गम्, तद्वशादेव वैराग्यविशद इत्यत्र द्वितीयार्थानुसन्धानात् । श्लेषश्च रूपकोपमयोरङ्गम्, तद्वशावगतनिर्वेदमाहिम्नैव जटाया अक्ष

वलयधारणस्य च सङ्गतेः। तारापरिकरकपालेति रूपकं पितृवन इवेत्युपमाया अङ्गम्, तद्बीजं हि सादृश्यम्, न च श्मशाने व्योम्ना सह तत्साहजिकं किन्तु रूपितकपालाश्रयत्वेनैवेति। सर्वत्र चाङ्गानां चारुत्वार्थमङ्ग्यपेक्षा पूर्ववदूहनीया। सर्वेषां चैषां पार्यन्तिकचारुत्वहेतुरङ्गिभूता च समासोक्तिः, चन्द्रगतत्वेन महाव्रतिवृत्तान्तप्रतीतेः। सा च व्यक्तैवेति वृत्तिकृद्भिर्नोक्तेत्यवधेयम्।

ननु कलङ्काक्षवलयेति कथमेकान्ततो रूपकमुच्यते, उपमाया अपि सम्भवेन सन्देहसङ्करौचित्यात् इति चेन्न। रूपकपरिग्रहे करधृतत्वमेव साधकं प्रमाणमतः सन्देहस्याभावात्। कथमस्य साधकत्वमिति चेत्, इत्थम्। करधृतत्वरूपविशेषणस्याक्षवलये एव सार्वत्रिकी प्रसिद्धिः न तु कलङ्के। अतः प्राधान्येनाक्षवलयप्रतीतिरेवोद्देश्या। सा च रूपकपरिग्रहेणैव सम्भवति। तत्र तिरोहितकलङ्करूपमक्षवलयत्वमेव मुख्यतयाऽवगम्यते। नन्वेवमपि विशेषणमिदमसम्यगेव। चन्द्रपक्षे किरणेन कलङ्कधारणस्याभावात्। मूर्त्यैव तेन तद्धारणात् इति चेन्न, श्लेषच्छायया कलङ्कस्याप्रधानस्य करधारणमसदेव प्रत्यासन्नतयोपचर्य योज्यते। तथा सत्युपमापरिग्रहे को दोष इति चेत्, कलङ्कोऽक्षवलयमिवेत्युपमायां कलङ्कस्य प्रधानत्वेन प्रतीतिः। न चास्य करधृतत्वं मुख्यतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात्। मुख्यविषयोपचारापेक्षया चामुख्योपचार एव श्रेयान् इति रूपकमेवाश्रीयते इति भावः।

एवंरूपश्च सङ्करः शब्दालङ्कारयोरपि परिदृश्यते। यथा—

एवंरूप इति। अनुग्राह्यानुग्राहकरूप इत्यर्थः। यथा—

राजति तटीयमविरतदानवरासाऽतिपातिसारावनदा
गजता च यूथमविरतदानवरा साऽतिपाति सारा वनदा

इयं तटी राजतीति सम्बन्धः । कीदृशी, अविरतो दानवानां रासः—शब्दो यस्यां सा, अतिपाती सारावः—सशब्दो नदो यस्यां सा । गजता च यूथमतिशयेन पाति—रक्षति, किम्भूता अविरतेन दानेन वरा श्रेष्ठा सारा स्थिरा वनदा-वनखण्डिकेत्यर्थः ।

अत्रेत्यादि । यद्यपि यमकानुलोमविलोमचित्रभेदयोर्न स्फुटं परस्परापेक्षित्वम्, तथापि यमकनिर्वाहप्रवृत्तस्य कवेः पृथक् प्रयत्नानिवृत्ततयाऽनुलोमविलोमस्योत्पत्तौ यमकापेक्षा । यमकस्य तु चारुतातिशये तदपेक्षता । तदाश्रयेणातिदुष्करतयाऽतिशयेन विदग्धमनोऽनुरञ्जकत्वादित्याशयः ।

एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥ १४० ॥

न्यायः साधकप्रमाणता । दोषः प्रतिकूलः । ग्रहो व्यवस्थितिः । यत्र द्वयोर्बहूनां वाऽलङ्काराणामेकत्र योग्यत्वेऽपि विरोधान्नैकदा व्यवस्थितिः । न चैकतरस्य परिग्रहे साधकं तदितरपरिग्रहे बाधकं वा येन तदेव व्यवतिष्ठते, सोऽप्यनिश्चयरूपो द्वितीयः सङ्करः, सूत्रस्य चकारेण सङ्करस्यैवापेक्षणादित्यर्थः ।

उदाहरणम्—

जह गहिरो जह रअणणिब्भरो जह अ णिम्मलच्छाओ ।
तह किं विहिणा एसो सरसवाणीओ जलणिही ण किओ ॥

आर्या विपुला । लक्षणमुक्तं प्राक् ।

यथा गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः ।
तथा किं विधिना एषः सरसपानीयो जलनिधिर्न कृतः ॥

इति संस्कृतं स्पष्टम् ।

अत्र किं समुद्रे प्रस्तुते श्लिष्टविशेषणमहिम्नाऽप्रस्तुतविशेषप्रतीतेरियं समासोक्तिः। किं वाऽब्धेरप्रस्तुतात्प्रस्तुतस्य पुरुषविशेषस्य तत्समानगुणतया प्रतिपत्तेरप्रस्तुतप्रशंसेति सन्देहः।

एकस्यैकदा प्रस्तुताप्रस्तुतोभयरूपत्वाभावादनयोर्युगपदसम्भवात्, न्यायदोषयोरसम्भवाच्चेत्यर्थः। अयं द्वयोः सङ्करः।

बहूनां यथा—

यथा वा—

नयनानन्ददायीन्दोर्बिम्बमेतत् प्रसीदति।
अधुनाऽपि निरुद्धाशमविशीर्णमिदं तमः ॥५७४॥

स्पष्टम्।

अत्र किं (कामोद्दीपकः कालो वर्तते इति भङ्ग्यन्तरेणाभिधानात्) पर्यायोक्तम्, किं वैतदित्यस्य बिम्बपरामर्शकत्वेन वदनस्येन्दुबिम्बत्वेनाध्यवसानादतिशयोक्तिः, अथवैतदिति वक्त्रं निर्दिश्येन्दुबिम्बरूपणवशाद्रूपकम्। अथ वा प्रसीदतीत्यस्य उभयत्रान्वयविवक्षायामेकतरस्य प्रकृतत्वाद्दीपकम्, द्वयोरपि प्रकृतत्वे वा अप्रकृतत्वे वा तुल्ययोगिता, किं वा प्रदोषवर्णने चन्द्रबिम्बस्य प्रकृतत्वे विशेषणसाम्यादाननप्रतीतौ समासोक्तिः, अहोस्विन्मुखनैर्मल्यवर्णनप्रस्तावाच्चन्द्रस्याप्रस्तुतत्वेनाप्रस्तुतप्रशंसेति बहूनां सन्देहादयमेव सङ्करः।

न्यायदोषयोरभावादित्यर्थः।

यत्र तु तदन्यतरस्यावतारस्तत्रैकतरनिश्चयान्न संशयः।

न्यायश्च साधकत्वम् ( अनुकूलता ) । दोषोऽपि बाधकत्वम् ( प्रतिकूलता ) ।

तत्र—

सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः ।

इत्यत्र मुख्यतया अवगम्यमाना हासद्युतिर्वक्त्रे एवानुकूल्यं भजते इत्युपमायाः साधकम्, शशिनि तु न तथा प्रतिकूलेति रूपकं प्रति तस्या अबाधकता ।

सौभाग्यमित्यादि । अत्र मुख्यत्वेन प्रतीयमाना हसितद्युतिर्वक्त्रे एवानुकूल्यं भजते, तत्रैव मुख्यतस्तत्सम्भवात् । वक्त्रस्य प्राधान्येनावगति रुपमायामेवेत्युपमासाधिका। शशिनि नानुकूला, मुख्यतस्तत्र हासद्युतेरभावात् । नापि प्रतिकूला, गौणत्वेनाप्युपपत्तेरिति न रूपकं प्रति साधिका बाधिका वा ।

वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः ॥५७६॥

इत्यत्रापरत्वमिन्दोरनुगुणं न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते न तूपमायाः बाधकताम् ।

अत्रापरत्वमिन्दोरनुगुणम्, मुखरूपेन्दौ सति किमपरेणेन्दुनेति प्रतीतेः, तथा प्रतीतिश्च रूपकेण विना नेति रूपकं प्रति साधकतां प्रतिपद्यते न पुनर्वक्त्रस्य प्रतिकूलम्, इन्दुसमानगुणे सति किमपरेन्दुरुदित इति प्रतीतावत्रात्यन्तासङ्गत्यभावात्, अतो नोपमाबाधकम् । तत्पद्यन्तु—

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतो
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव विम्बाधरे ॥ इति ।

राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।

इत्यत्रालिङ्गनमुपमायां बाधकम् । स्वामिसदृशं प्रति परप्रेयसीप्रयुक्तस्यालिङ्गनस्यानौचित्यात्, न तु रूपके साधकम् ।

पादाम्बुजं भवतु वो विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥

इत्यत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलम् असम्भवादिति रूपकस्य बाधकम्, न तु पादेऽनुकूलमित्युपमायाः साधकमभिधीयते, विध्युपमर्दिनो बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेः । एवमन्यत्रापि सुधीभिः परीक्ष्यम् ।

अत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलम्, तत्रासम्भवात्, अतो रूपके बाधकम् ।

श्लोकपूर्वार्धन्तु—

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ॥ इति ।

नन्वेतदुपमासाधकमपि भवति, पादेऽनुकूलत्वात् । तत्कथं रूपकबाधकतामात्रमस्योच्यते न तूपमासाधकत्वमपीति । एवमन्यत्रापि यदेकत्राऽनुकूलं तद्बाहुल्येनापरत्र प्रतिकूलम्, यच्चैकत्र प्रतिकूलम्, तत्तत एवान्यत्रानुकूलम्, अन्यथा तथात्वस्यैवासम्भवात् इति चेत् । सत्यम् । किन्तु यस्य यथा उत्कटत्वं प्रतीयते तत्र तस्य तथात्वव्यपदेशः । अत्र तु विध्युपमर्दि बाधकं साधकापेक्षयोत्कटत्वेन प्रतीयत इति तेनैव व्यपदेशो युक्तः । तदेतदुक्तम्—विध्युपमर्दिन इत्यादि ।

अन्ये तु तदन्यथा व्याचक्षते—विधीयतेऽनेनेति विधिः

साधकम्, तदुपमर्दे च तस्माद्बलीयः। एतदुक्तं भवति-मञ्जीर-शिञ्जितस्य पादे सम्भवमात्रेण न तावदुपमासाधकत्वं निर्वहति यावदम्बुजे तद्विरहो न निश्चीयते। तथा च तद्बाधकस्यैव प्राथमिकत्वात्तन्मुखेनैव व्यपदेश इति। एवमन्यत्रापि साधकबाधकत्वं सुधीभिः परिभावनीयम्।

स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयम्।

व्यवस्थितं च।

अभिन्ने एव पदे स्फुटतया, यत्, उभावपि शब्दार्थालङ्कारौ व्यवस्थां समासादयतः, सोऽप्यपरः सङ्करः। उदाहरणम्—

अभिन्न एवेत्यादि। विषयः-पदम्। तेनैकत्र पदे यदुभौ शब्दार्थालङ्कारौ स्फुटं व्यवस्थितौ भवतः सोऽप्यपरः सङ्कर इत्यर्थः। उदाहरणम्—

स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम्।
स्रस्ताष्टदिग्दलकलापमुखावतार-
बद्धान्धकारमधुपावलि संचुकोच॥ ५७९॥

स्पष्टमुल्लसन्तः किरणा एव केसराः-किञ्जल्का यस्यां तादृशी सूर्यबिम्बात्मिका विस्तीर्णा कर्णिका यस्य तथाभूतम्, दिवसमेवारविन्दम्-पद्मम्, अथोऽनन्तरम्, स्रस्तानां-प्रदोषागमत्रासात्सङ्कुचितानामष्टदिगात्मकदलानां कलापः-समुदाय एव मुखं तत्रावतारेण-प्रवेशेन बद्धा-निरुद्धा अन्धकारात्मिका मधुपानामावलिः-पङ्क्तिर्यत्र तादृशं सत् संचुकोच निमिमीलेत्यर्थः। वसन्ततिलका छन्दः। लक्षणमुक्तं प्राक्।

अत्र एकपदानुप्रविष्टौ रूपकानुप्रासौ ।

अत्रेत्यादि । अत्र पादत्रये प्रत्येकं रूपकानुप्रासौ प्रविष्टौ इत्यर्थः ।

तेनासौ त्रिरूपः परिकीर्तितः ॥ १४१ ॥

तस्मादनुग्राह्यानुग्राहकतया, सन्देहेनैकपदप्रतिपाद्यतया व्यवस्थितत्वाच्च त्रिरूपप्रकारकोऽयं सङ्करः कथितः । प्रकारान्तरेण तु न शक्यो व्याकर्तुम्, भेदानामनन्तत्वादिति प्रतिपादिताः शब्दार्थतदुभयगतत्वेन त्रिविधा अलङ्काराः ।

कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलङ्कारः शब्दस्य, कश्चिदर्थस्य, कश्चिच्चोभयस्य इति चेत् । उक्तमत्र, यथा काव्ये दोषगुणालङ्काराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः, निमित्तान्तरस्याभावात्, ततश्च योऽलङ्कारो यदीयान्वयव्यतिरेकावनुविधत्ते, स तदलङ्कारो व्यवस्थाप्यते इति । एवं च यथा पुनरुक्तवदाभासःपरम्परितरूपकं चोभयोर्भावाभावानुविधायितया उभयालङ्कारौ, तथा शब्दहेतुकार्थान्तरन्यासप्रभृतयोऽपि द्रष्टव्याः, अर्थस्य तु तत्र वैचित्र्यम् उत्कटतया प्रतिभासते इति वाच्यालङ्कारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः ।

योऽलङ्कारो यदाश्रितः स तदलङ्कार इत्यपि कल्पनायाम् अन्वयव्यतिरेकावेव समाश्रयितव्यौ, तदाश्रयणमन्तरेण विशिष्टस्याश्रयाश्रयिभावस्याभावा-

दित्यलङ्काराणां यथोक्तनिमित्त एव परस्परव्यतिरेको ज्यायान् ।

ननु त्रिविधानामप्येषां काव्यशोभातिशयहेतुत्वस्य तुल्यत्वेऽपि कुत एष नियमः कश्चिच्छब्दस्य, कश्चिदर्थस्य, कश्चिदुभयोरिति चेत् । उक्तमत्र प्रागेव नवमोल्लासे श्लेषालङ्कारप्रकरणे दोषगुणालङ्काराणां शब्दार्थोभयगतत्वव्यवस्थाया मन्वयव्यतिरेकावेव प्रभवतः, योऽलङ्कारो यदीयान्वयव्यतिरेकावनुविधत्ते स तदलङ्कार इति व्यवस्थाप्यते, शब्दान्वयव्यतिरेकानुविधायित्वं चैतदेव यच्छब्दपरिवृत्त्यसहत्वम् । नन्वेवं यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयभावाभावानुविधायित्वेनोभयालङ्कारः । तथाशब्दहेतुकार्थान्तरन्यासप्रभृतयोऽप्युभयालङ्कारौ भवेतामिति चेत् । इष्टापत्तेः । एवं तर्हि कथमुभयालङ्कारप्रस्तावमुल्लङ्घ्यार्थमात्रालङ्कारप्रस्तावे पठिता इति चेत्, तत्रार्थवैचित्र्यस्य प्रकटतया प्रतिभासात् । अथ योऽलङ्कारो यदाश्रितः स तदीय इत्येव किं न विभाग इति चेत् । उच्यते । तथाकल्पनायामन्वयव्यतिरेकावेवावश्यमाश्रयितव्यौ, तद्व्यतिरेकेण विशिष्टस्याश्रयाश्रयिभावस्याभावात् । तस्मादलङ्काराणामन्वयव्यतिरेकनिबन्धन एव परस्परं भेद इत्येव ज्याय इत्यर्थः ।

नन्वलङ्काराणां दोषाः प्राचीनैरभिहिताः ते किं न सन्त्येव, आहोस्वित्सम्भविनोऽप्युपेक्षिताः । आद्येऽनुभवविरोधः । अन्त्ये न्यूनतेत्यत आह—

एषां दोषा यथायोगं सम्भवन्तोऽपि केचन ।
उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिताः ॥ १४२॥

तथाहि, अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिवि-

रोध इति ये त्रयो दोषाः, ते प्रसिद्धिविरुद्धताम् , अपुष्टार्थत्वम् , प्रतिकूलवर्णतां च यथाक्रमं न व्यतिक्रामन्ति, तत्स्वभावत्वात् । क्रमेणोदाहरणम्—

तथाहीत्यादि । अन्तर्भावं दर्शयति । अनुप्रासस्य तावत् त्रयो दोषाः, प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोधश्च । ते च यथाक्रमं प्रसिद्धिविरोधापुष्टार्थत्वप्रतिकूलवर्णेभ्यो नातिरिच्यन्ते, तत्स्वभावादित्यर्थः । तत्र प्रसिद्ध्यभावो यथा—

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिर्धूर्ध्वजाग्रान्
अक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।
रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
प्रातः स्तौति प्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिः अनुप्रासानुरोधेनैव कृता, न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः ।

चक्री—विष्णुः जगदुपकृतये—संसारोपकाराय नित्ययुक्तस्य—सदासज्जितस्य यस्य—रथस्य चक्रे आराश्चक्रारास्तेषां पङ्क्तिं—कीलकपङ्क्तिं प्रातः—प्रभातसमये प्रसन्नः सन् अन्वहं—प्रतिदिनं स्तौति, एवं हरिरिन्द्रो हरीन्—वाजिनः । धूर्जटिः—शिवः धुरं—यानमुखं ध्वजाग्रान् पताकाग्रभागांश्च, नक्षत्रनाथश्चन्द्रोऽक्षं—चक्रनाभिप्रोतं लोहदण्डं । वरुणः अरुणं—सारथिं कुबेरः कूबराग्रं—युगन्धराग्रम् , सुराणां सङ्घो—देवसमूहो रंहः—रथवेगं प्रातः कालेऽन्वहं स्तौति । सोऽहिमरुचेः—सूर्यस्य स्यन्दनो वो—युष्मानवतात् रक्षत्वित्यर्थः । स्रग्धराछन्दः । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्' इति लक्षणात् ।

अत्रेत्यादि । अत्र चक्रीप्रभृतीनां कर्तॄणां चक्रारपङ्क्त्या-

दीनां कर्मणां प्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव निबद्धा न पुनरितिहासादिषु तथा प्रसिद्धेति प्रसिद्ध्यभावः। सोऽयं प्रसिद्धिविरोध एवेत्यर्थः। वैफल्यं दर्शयति।

**भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि**
**यदि सल्लीलोल्लापिनि गच्छसि तत्किं त्वदीयं मे॥५८१॥**
**अनणुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम्।**
**परिसरणमरुणचरणे रणरणकमकारणं कुरुते॥५८२॥**

सुगमम्।

**अत्र वाच्यस्य विचिन्त्यमानं न किञ्चिदपि चारुत्वं प्रतीयते इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम्।**

हे आनन्दस्यन्दी सुन्दरो य इन्दुः—शारदपूर्णिमाचन्द्रस्तद्वत्प्रकाशमानं मुखं यस्यास्तादृशि, सतीभिर्लीलाभिरुल्लापितुं शीलं यस्या तथाभूते, अरुणौ—सालक्तकौ चरणौ यस्यास्तथाभूते, तरुणि—नायिके अत्र सम्बोधनविशेषणैर्नायिकायाः स्वाधीनपतिकात्वं निःशङ्कत्वं च व्यज्यते, मे भण—वद, यदि रमणमन्दिरं—क्रीडागृहं गच्छसि तत्तर्हि अनणुरणन्तो बहुतरं शब्दायमाना मणयो यस्यां तादृशी मेखला यत्र तथाभूतम्, अविरतशिञ्जानानि मञ्जुमञ्जीराणि यत्र तादृशं त्वदीयं परिसरणं—तवागमनम् किमकारणं—किमिति व्यर्थं रणरणकमुत्कण्ठातिशयं कुरुते इत्यर्थः।

अत्र वाच्यस्येत्यादि। क्रीडागृहं यदि गच्छसि तदा किमिति तव गमनं वृथा रणरणकं कुरुते इति वाक्यार्थे वैचित्र्याभावस्यानुभाविकत्वेन केवलं शब्दमात्रपर्याप्तोऽनुप्रास इत्यर्थापरिपोषादपुष्टार्थतेत्यर्थः। तथा च शब्दालङ्कारत्वेऽपि अनुप्रासादीनामर्थोपकारत्वेनावश्यं भवितव्यमिति भावः। नहि शब्दालङ्काराणां सर्वथाऽर्थमपुरस्कृत्यैव रसोपकारत्वम्। परम्परा-

सम्बन्धेन शब्दवदर्थस्यापि घटकत्वात् । परंतु शब्दान्वयव्यति-रेकानुविधायित्वात् 'प्राधान्येन व्यपदेशाः' इति न्यायात्तदी-यत्वेन व्यपदेश इति, न तु सर्वथाऽर्थानपेक्षता । तदुक्तं यत्सोऽ-र्थान्तरयुक्ततेति । एवं चार्थोपकारकत्वरूपद्वारबाधात्मकृतानु-प्रासस्य चमत्कारानुपयोगित्वमेवेत्याशयः ।

'अकुण्ठोत्कण्ठया' इति । अत्र शृङ्गारे परुषवर्णा-डम्बरः पूर्वोक्तरीत्या विरुध्यते इति परुषानुप्रासोऽत्र प्रतिकूलवर्णतैव वृत्तिविरोधः ।

वृत्तिविरोधं दर्शयति । अकुण्ठोत्कण्ठयेत्यादि अत्र शृङ्गारे परुषवर्णा पूर्वोक्तगुणविवेचनप्रस्तावोक्तरीत्या विरुद्धा इति प्रतिकूलवर्णतैव वृत्तिविरोध इत्युच्यते इत्यर्थः ।

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः ।

यमकस्येत्यादि । यमकस्य तु पादत्रयगतत्वेन यमनम-प्रयुक्तपेच, कविभिस्तथाऽप्रयोगात् ।

यथा—

> भुजङ्गमस्येव मणिः सदम्भाः
> ग्राहावकीर्णेव नदी सदम्भाः ।
> दुरन्ततां निर्णयतोऽपि जन्तोः
> कर्षन्ति चेतः प्रसभं सदम्भाः ॥ ५८२ ॥

अम्भस्तेजः । अत एव शस्त्रस्फटिकमौक्तिकादौ सम्भा-नीयमिदमिति व्यवहारः परीक्षकाणाम् । तथा च भुजङ्गमस्य सर्पस्य—सदम्भाः—उत्कृष्टकान्तिः मणिरिव । तथा ग्राहावकीर्णा नक्रैर्व्याप्ता सदम्भाः—स्वच्छतरजला नदीव सदम्भा—दम्भयुक्ताः दुरन्ततां निर्णयतोऽपि अर्थात्तादृशमणि—तादृशनदी—तादृशपु-रुषनिष्ठामनधिगम्यतां निश्चिन्वतोऽपि जन्तोः—प्राणिनश्चेत-

श्चित्तं प्रसभं—बलात्कारेण कर्षन्तीत्यर्थः ।

उपमायां उपमानस्य जातिप्रमाणगतन्यूनत्वम्, अधिकता वा तादृशी अनुचितार्थत्वं दोषः, धर्मांश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वं च न व्यभिचरतः । क्रमेणोदाहरणम्—

उपमायामित्यादि । उपमायान्तु यौ न्यूनाधिकोपमानत्वे दोषौ, तत्रोपमाने उपमेयापेक्षया जातिगतं प्रमाणगतं वा यन्न्यूनत्वमधिकत्वं वा तदनुचितार्थत्वम् । धर्मतो न्यूनाधिकत्वे यथाक्रमं न्यूनपदत्वाधिकपदत्वे । तत्र जातिगते न्यूनत्वे यथा—

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ॥५८४॥

अत्र चण्डालत्वजातेर्न्यूनतया दुष्कर्मकारित्वव्यक्तेरनुचितार्थत्वम् । इदमवधेयम्—यदा साहसिकमात्रोपमानविवक्षया चण्डालादिपदमुपादीयते, तदैवेदमुदाहरणं न तु दुष्कर्मकारित्वविवक्षायामपि । प्रमाणगतं यथा—

वन्हिस्फुलिङ्ग इव भानुरयं चकास्ति ॥ ५८५ ॥

इति । जातिगतमधिकत्वं यथा—

अयं पद्मासनासीनश्चक्रवाको विराजते ।

युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः ॥५८६॥

स्पष्टम् । ब्रह्मणः कल्पभेदेन भेदात् ब्रह्मत्वं जातिः । प्रमाणगतमधिकत्वं यथा—

पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।

वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥ ५८७ ॥

स्पष्टम् ।

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थित इत्यनुचितार्थता ।

एषु चण्डालादिभिरुपमानैरुपमेयभूता अर्थाः अत्यन्तमेव कदर्थिताः निन्दोपहासादिप्रतीतेरित्यनुचितार्थता । यद्यपि चण्डाले न्यूनत्वेनोपमेयस्य तिरस्कारेऽपि ब्रह्मादिभिरुपमानैर्न तथा, तथाऽप्यत्युत्कृष्टस्योपमानत्वमप्यपकृष्टस्योमेयस्योपहासाय भवतीति बोध्यम् । धर्मगतं न्यूनत्वं दर्शयति ।

**स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।**

**व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥ ५८८ ॥**

स्पष्टम् ।

**अत्रोपमानस्य मौञ्जीस्थानीयस्ताडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादितः इति हीनपदत्वम् ।**

अत्रोपमेयमौञ्जीस्थानीयस्तडिल्लक्षणो धर्मो न केनापि पदेन प्रतिपादितः, न चाक्षेपादिनापि स्पष्टं प्रतीयते, अविनाभावाद्यभावादिति न्यूनपदत्वमेवेतत् । धर्मगतमधिकत्वं दर्शयति —

**स पीतवासाः प्रगृहीतशार्ङ्गो**

**मनोज्ञभीमं वपुराप कृष्णः ।**

**शतह्रदेन्द्रायुधवान्निशायां**

**संसृज्यमानः शशिनेव मेघः ॥ ५८९ ॥**

उपेन्द्रवज्रा छन्दः । लक्षणमुक्तं प्राक् । शतह्रदा—विद्युत् । स्पष्टमन्यत् ।

**अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यते—इत्यधिकपदत्वम् ।**

अत्रोपमेयशङ्खाद्यनिर्देशादुपमाने तत्तुल्यस्य शशिनो ग्रहणमतिरिक्तमित्यधिकपदत्वमेवैतत् ।

**लिङ्गवचनभेदोऽपि उपमानोपमेययोः साधारणं**

चेत् धर्ममन्यरूपं कुर्यात्, तदा एकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेनापि धर्मेण प्रतीयते इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमरूपत्वम् । यथा--

लिङ्गवचनभेदोऽपीत्यादि । अन्यरूपमित्यसाधारणरूपम् । तदैकतरस्यैवेति । असाधारणत्वादेवोभयत्र नान्वय इति भावः । सविशेषणेति । यदोपमानान्वितं विशेषणं तदा विशिष्टस्योपमानता । यदोपमेयान्वितं विशेषणं तदा विशिष्टस्योपमेयतेत्यर्थः । ननूपात्तधर्मस्य विशेष्यनिष्ठत्वे साधारणधर्माभावात्कथमुपमानिर्वाह इत्यत आह—प्रतीयमानेनापीति । शब्दार्थोपस्थापितस्य विशेष्यनिष्ठत्वेऽपि प्रतीयमानेनैव साधारणधर्मेणोपमानिर्वाह इत्यर्थः । अपिशब्दाच्छब्दान्तरोपस्थापितेनापीति समुच्चीयते । व्याख्यातं च प्रदीपकारैः–भिन्नलिङ्गत्वभिन्नवचनत्वे अप्युपमादोषौ नोक्तदोषातिरेकिणौ । तथाहि–लिङ्गवचनयोः भेदे यद्युपमानोपमेययोः साधारणधर्मवाचकपदमन्यतरोचितलिङ्गं कुर्यात्तदैकतरस्यैव तद्धर्मसमन्वयावगतेः कथमुपमानिर्वाहः । अथ प्रतीयमानसाधर्म्यमाश्रित्येयं स्यात्, तथाऽप्युपात्तधर्मविशिष्टस्यैवोपमानत्वमुपमेयत्वं वा प्रतीयेत । न च तथा प्रस्तुतमतः प्रक्रान्तस्याभावाद्भग्नप्रक्रमत्वमेव दोष इति । यथेति लिङ्गभेदं दर्शयति--

चिन्तारत्नमिव च्युतोऽसि करतो
धिग्मन्दभाग्यस्य मे ।

अत्र च्युत इत्युपमेयमात्रेणान्वीयते पुंलिङ्गत्वात् । वचनभेदे यथा--

सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव ।

अत्र शुद्धा इत्युपमेयमात्रेणान्वीयते। लिङ्गभेदोऽत्र विद्यमानोऽप्यप्रधानम्। उपमानस्य बहुत्वे लिङ्गभेदेऽप्युभयान्वयसम्भवात्।

यत्र तु नानात्वेऽपि लिङ्गवचनयोः, सामान्याभिधायि पदं स्वरूपभेदं नापद्यते, न तत्रैतद्दूषणावतारः, उभयथाऽपि अस्य अनुगमक्षमस्वभावत्वात्। यथा—

यत्र तु लिङ्गवचनयोर्भेदेऽपि सामान्याभिधायि पदमुपात्तरूपभेदं नापद्यते। किन्तूपात्तेनैव रूपेणोभयत्रान्वेति, तत्र दोषत्वमेव नास्ति। उभयत्राप्यस्यानुगमयोग्यस्वभावत्वात्। तत्र लिङ्गभेदे यथा—

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः।

अत्र लिङ्गभेदेऽपि विशेषणान्वयस्याविशेषाद्दोषत्वाभावः।

वचनभेदे यथा—

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।
दधते स्म परां शोभां तदीया इव विभ्रमाः॥५९३॥

मधुरताभृतः, अत एवान्याभिः स्त्रीभिः-अन्यस्त्रीणां वेषैरसदृशः तद्वेषः, तस्या–नायिकाया वेषः तदीया विभ्रमा इव परां शोभां दधते स्म इत्यन्वयः। तद्वेष इत्युपमेयम्। विभ्रमा इत्युपमानम्। असदृश इति, मधुरताभृत इति, दधते इति च साधारणधर्माभिधायीनि पदान्युभयत्राप्यन्वितानि। तत्र वचनभेदेऽपि रूपसाम्यान्न दोषः। अत्र असदृश इत्यजन्तत्वे एकवचनान्तम्। हलन्तत्वे बहुवचनान्तम्। एवं मधुरताभृत इत्यपि। दधत इति 'दध' धारणे इत्यस्य दधातेश्च यथाक्रममात्मनेपदैकवचनबहुवचनयोरपि रूपमिति बोध्यम्।

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलित

लितरूपतया विश्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः । यथा—

कालेत्यादि । कालो—वर्तमानादिः । पुरुषः—प्रथममध्यमोत्तमरूपः । विधिरप्रवृत्तप्रवर्तनम्, आदिपदान्निवर्तनम् । तथा च कालपुरुषविध्यादिभेदेऽपि भग्नप्रक्रम एव दोषः । तथाप्रतीतेरस्खलितरूपतया विश्रान्त्यभावात् । तत्र कालभेदे यथा—

अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥ ५९४ ॥

अत्र चेतना प्रसादमाप्नोति, न पुनरापेति कालभेदः ।

अत्र चेतना प्रसादमाप्नोति इति प्रकृतं न तु तमापेति कालभेदे प्रक्रमभेद एव । पुरुषभेदे यथा—

प्रत्यग्रमज्जनविशेषविविक्तमूर्त्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥ ५९५ ॥

हे सखि—प्रत्यग्रं यन्मज्जनं—स्नानं सेचनं च तेन विशेषतो विविक्ता—स्वच्छा मूर्तिर्यस्याः सा तादृशी, कौसुम्भरागेण रुचिरः—सुन्दरः स्फुरद्देदीप्यमानोंऽशुकान्तो—वस्त्रमध्यभागो यस्याः सा तादृशी, मकरकेतनं—कामदेवमर्चयन्ती त्वं बालान्यभिनवतराणि प्रवालानि—किसलयानि यत्र तादृशो विटपस्तदुत्पत्तिस्थानभूता या लता तद्वद्विभ्राजसे इत्यर्थः । वसन्ततिलका छन्दः । 'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् ।

प्रत्यग्रेत्यादि विशेषणं साधारणम्। कौसुम्भेत्यादि नायिकाविशेषणमेव, बालेत्यादि लताविशेषणमेव। एवं च अंशुभिः पुष्पधूलिभिरिति श्रीवत्सलाञ्छनभट्टाचार्याणां व्याख्यानं प्रामादिकमेव। अंशुपदस्य परागवाचकत्वाभावात्प्रकृतार्थासामञ्जस्याच्चेति सहृदयैराकलनीयम्।

अत्र लता विभ्राजते न तु विभ्राजसे—इति सम्बोध्यमाननिष्ठस्य परभागस्य असम्बोध्यमानविषयतया व्यत्यासाद् पुरुषभेदः।

अत्रेत्यादि। अत्र विभ्राजते इति प्रस्तुतम्, न तु सा विभ्राजसे इति, तस्मात्पुरुषभेदः। सम्बोध्यनिष्ठस्य भ्राजनस्यासम्बोध्यविषयतयाऽप्रतीतेरिति भावः। विधिभेदमुदाहरति—

गङ्गेव प्रवहतु ते सदैव कीर्तिः॥ ५९६॥

इत्यादौ च गङ्गा प्रवहति न तु प्रवहतु—इति अप्रवृत्तप्रवर्तनात्मनो विधेः।

एवंजातीयकस्य चान्यस्यार्थस्य उपमानगतस्यासम्भवाद्विध्यादिभेदः।

इत्यादावित्ति। अप्रवृत्तप्रवर्तनात्मनो विधेर्भेदः, यतो गङ्गा प्रवहतीति विवक्षितं न तु सा प्रवहत्विति। एवंविधस्यार्थस्योपमानगतस्यासम्भवाद्विध्यादिभेदा द्रष्टव्याः। इदन्त्ववधेयम्—उपमानोपमेयभावे लिङ्गवचनकालपुरुषाणां भेदः सजातीय एव सम्भवति, विधेस्त्वेकमात्रान्विततया भेदो विजातीय एवेति।

ननु समानम् उच्चारितं प्रतीयमानं वा धर्मान्तरमुपादाय पर्यवसितायामुपमायाम् उपमेयस्य प्रकृत

धर्माभिसम्बन्धान्न कश्चित्कालादिभेदोऽस्ति । यत्रा-प्युपात्तेनैव सामान्यधर्मेण उपमा अवगम्यते, यथा 'युधिष्ठिर इवायं सत्यं वदति'-इति, तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिपत्स्यामहे । स-त्यवादी सत्यं वदतीति च न पौनरुक्त्यम् आशङ्कनी-यम्, रैपोषं पुष्णातीतिवत युधिष्ठिर इव सत्यवदनेन सत्यवाद्ययमित्यर्थावगमात् । सत्यमेतत्, किन्तु स्थि-तेषु प्रयोगेषु समर्थनमिदं न तु सर्वथा निरवद्यम्, प्र-स्तुतवस्तुप्रतीतिव्याघातादिति, सचेतस एवात्र प्र-माणम् ।

ननु समानमित्यादि । अयमाशयः-ननूदाहृतेषु कथं दुष्टता, भिन्नकालसम्भिन्नाद्धर्मादतिरिक्तमुपात्तं प्रतीतं वा कश्चि-त्साधारणं धर्ममुपादायोपमापर्यवसाने पश्चाद्भिन्नकालादिसम्भिन्न धर्मान्वयात् । तथाहि-'विभ्राजसे' इत्यत्र विविक्तमूर्त्तित्वादि-ना लतानायिकयोरुपमापर्यवसाने पश्चात् 'विभ्राजसे' इत्यस्य नायिकामात्रान्वयेऽपि को दोषः ।

अथ यत्रोपात्तेनैव धर्मेणोपमानिर्वाहः स च धर्मभेदः का-लभेदादिसम्भिन्न एव तत्र का गतिः । यथा 'युधिष्ठिर इवायं सत्यवादीति । युधिष्ठिरो हि सत्यमवादीदिति चेत् । उच्यते । तत्रापि सत्यवादीति प्रतीतधर्मेणैवोपमेत्यव्याघातः । न च तथा सति सत्यवाद्ययं सत्यं वदतीति पुनरुक्तमिति वाच्यम् । रैपोषं पुष्णातीत्यनुप्रयोगवददोषत्वात् । रैपोषमित्यत्रार्थव्यत्ययेन पो-षणस्येवात्राजानिकसत्यवादित्वस्य प्रतीतेरिति । सत्यमात्थ । किन्तु स्थितेष्वनुप्रयोगेषु क्वचित्तथापुनरुक्तिमात्रसमर्थनं न तु सर्वथैव तन्निरवद्यम् , प्रस्तुतस्य रसादेः प्रतीतिस्खलनात् ।

न च तदसिद्धम्, सहृदयवेद्यत्वात् । किञ्च उपात्तधर्ममनादृत्य प्रतीतेनोपमेति तुच्छम्, उपातक्रिययैव तद्विलक्षणात् । उपस्थितसाधर्म्यं विहायानुपस्थितसाधर्म्यकल्पने श्रुतहान्यश्रुतकल्पनाभ्यामास्वादप्रकर्षप्रतिबन्धात् । एवञ्च 'गङ्गेव प्रवहतु' इत्यादौ अत्युज्ज्वलेत्यादिपदाध्याहारे दोषोद्धारेपि न सर्वथा निरवद्यतेति ।

असादृश्यासम्भवावप्युपमायाम् अनुचितार्थतायामेव पर्यवस्यतः । यथा—

असादृश्येत्यादि । असादृश्यासम्भवावप्युपमादूषणे अनुचितार्थतायामेव पर्यवस्यतः । यथा—

'ग्रन्थामि काव्यशशिनं विततार्थरश्मिम् ।

अत्र काव्यस्य शशिना अर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम् ।

अत्र काव्यस्य शशिनाऽर्थानां च रश्मिभिः साधर्म्यं न क्वापि प्रसिद्धमिति तत्रोपमानिबन्धनमनुचितार्थत्वमिति ।

निपेतुरास्यादिव तस्य दीप्ताः
शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा
दिनार्धभाजः परिवेषिणोऽर्कात् ॥ ५९८ ॥

स्पष्टम् । इन्द्रवज्रा छन्दः । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति लक्षणात् ।

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलात् निष्पतन्त्यो न सम्भवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।

अत्रापि ज्वलदम्बुधारायाः सूर्यमण्डलान्निष्पतनं न सम्भवतीति तन्निबन्धनमनौचित्यं पुष्णाति ।

उत्प्रेक्षायामपि सम्भावनं ध्रुवेवादय एव शब्दा वक्तुं सहन्ते न तु यथाशब्दोऽपि, केवलस्यास्य सादृश्यमेव प्रतिपादयितुं समर्थत्वात। अत उत्प्रेक्षायां यथाशब्दोपादानेऽवाचकत्वमेव। यथा—

उदयौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम्।
नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा ॥ ५९ ॥

उदयाविति। मुकुलं–मुकुलितं मेचकोत्पलम्–नीलोत्पलम् नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा–सुन्दरीनयनचातुर्यमधिकमिति शङ्कया सङ्कुचितमिव दीर्घिकागर्भाद्वापीमध्यादुदयौ प्रादुरासीदित्यर्थः।

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वाद् निरूपाख्यप्रख्यम्, तत्समर्थनाय यत् अर्थान्तरन्यासोपादानम्, तत् आलेख्यमिव गगनलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमेतस्य, अनुचितार्थतैव दोषः। यथा—

उत्प्रेक्षितमपीत्यादि। निरुपपाख्यमलीकम्। निर्विषयत्वमप्युत्प्रेक्षादूषणमनुचितार्थमेव। यत्तात्विकरूपाभावान्निरुपाख्यप्रख्यं तत्समर्थनाय यदर्थान्तरन्यासोपादानं तद्रूपं हितदिति भावः। यथा—

दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैःशिरसामतीव ॥ ६० ॥

स्पष्टम्। उपेन्द्रवज्रा छन्दः। 'उपेन्द्रवज्रा जतजास्ततो गौ' इति लक्षणात्।

अत्राचेतनस्य तमसो दिवाकरात् त्रास एव न

सम्भवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणम्, सम्भावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः ।

साधारणाविशेषणवशादेव समासोक्तिरनुक्तमपि उपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावात् अनुपादेयत्वं यत्, तत् अपुष्टार्थत्वं पुनरुक्तत्वं वा दोषः । यथा—

अत्रेत्यादि । अत्र तमसस्त्रास एवासम्भवी, तमसोऽचेतनत्वात्, तत्कथं तत्प्रयुक्तमद्रिणा तत्परित्राणमित्यर्थः । ननु स्वतः सम्भवित्वपक्षे दूषणमिदम् । कविप्रौढोक्तिनिष्पन्नत्वपक्षे तु न दोषः । 'पीडणभीत' इत्यादौ उत्प्रेक्षाया, स्त्रयमुदाहृतत्वादित्यत आह—सम्भावितेनेत्यादि । अयमाशयः—उत्प्रेक्षितत्रासवत्तया प्रतीतस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनाय यत्न इति ।

साधारणेत्यादि । अयम्भावः—यत्तु समासोक्तौ साधारणविशेषणबलादेवोपमानप्रतीतौ प्रयोजनाभावेन तदुपादानवैयर्थ्यं तदपुष्टार्थत्वं पुनरुक्तता वा दोष इति ।

स्पृशति तिग्मरुचौ ककुभः करै-
र्दयितयैव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं
रुचिरया चिरयाऽपि दिनश्रिया ॥ ६०१ ॥

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया नायिकात्वेन च व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेन ।

श्लेषोपमायास्तु स विषयः, यत्रोपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः । यथा—

स्पष्टम् । द्रुतविलम्बितं वृत्तम् 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् । अत्रेत्यादी । अयमर्थः—अत्र सदृशविशेषणबलेन लिङ्गविशेषपरिग्रहाच्च यथा तिग्मरुचेर्नायकतया ककुभां नायिकात्वेन व्यक्तिस्तथा ग्रीष्मदिवसश्रियोऽपि तत एव प्रतिनायिकात्वेन भविष्यतीति दयितयेत्यपुष्टार्थम् । अर्थतः प्रतीतस्योपादाने यदि पुनरुक्तिस्तदार्थपुनरुक्तं दोषः ।

नन्वस्यापुष्टत्वे श्लेषोपमा निर्विषया स्यादिति चेत् । न । स हि तस्या विषयो यत्रोपमानोपादानं विना श्लिष्टेष्वपि विशेषणेषु न स्फुटा प्रतिपत्तिः । यथा—

स्वयं च पल्लवाताम्रभास्वत्करविराजिनी ।
प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा ॥ ६०२ ॥

व्याख्यातमेतत् । अत्र प्रभातसध्यायाः अनुपादाने न स्फुटप्रतीतिः ।

अप्रस्तुतप्रशंसायामपि उपमेयमनयैव रीत्या प्रतीतं न पुनः प्रयोगेण कदर्थनां नेयम् । यथा—

अप्रस्तुतेत्यादि । अयम्भावः—अप्रस्तुतप्रशंसायामप्युपमेयस्योपादानवैयर्थ्यं यत्तदपुष्टार्थत्वमेव दोषः । तत्राप्युपमेयमनयैव रीत्याऽवगन्तव्यं न पुनः शब्दप्रयोगेण दुष्टत्वं नेयम् ।

यथा—

आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्यते
मध्येवारिधि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक्सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥ ६०३ ॥

अत्राचेतनस्य प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तौ न युक्तमेव पुनः कथनम् ।

अनामृष्टतत्त्वान्तरम्-अशोधितवस्तुस्वरूपम् अविवेकिनमिति यावत् । प्रभुमिव अचेतनं—जडं सामान्यं--समानधर्मवत्वं विहङ्गमादिमत्वमिति यावत् । धिक्---न्यक्कारः हेतुमाह--यत्सामान्यवशाद्विहङ्गमेष्वाहूतेषु---पक्षिष्वाकारितेषु मशकः-मक्षिकातोऽप्यतिलघुः पुरः आयान्--प्रथममागच्छन् न वार्यते--नोपरुध्यते तृणमणिर्विद्रुमः-मध्येवारिधि--वारिधेर्मध्ये वावसन्--अतिशयेन वसन् मणीनां--पद्मरागमरकतादीनां धुरं--प्रतिष्ठाभारं धत्ते, खद्योतः—ज्योतिरिङ्गणापरपर्यायः कीटविशेषोऽपि तेजस्विनां—सूर्यादीनामपि मध्ये प्रचलितुं—गन्तुं न कम्पत इति, काका कम्पत एवेत्यर्थः । शार्दूलविक्रीडितं छन्दः । 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् ।

अत्रेत्यादि । अयमर्थः—अत्राचेतसः प्रभोरुपमेयस्याप्रस्तुतनिष्ठसामान्यद्वारेणाभिव्यक्तिसम्भवादयुक्तमेव शब्देन कथनमित्यपुष्टार्थत्वं पुनरुक्तता वेति ।

तदेतेऽलङ्कारदोषा यथासम्भवमन्येऽप्येवंजातीयकाः प्रोक्तजात्यन्तर्भाविता इति न पृथक् प्रतिपादनमर्हन्तीति सम्पूर्णमिदं काव्यलक्षणम् ।

इति स्पष्टम् । एवंजातीयकाः । यथा—

दिलीप इव राजेन्दुरिन्दुः क्षीरनिधाविव ।

इत्यत्र राजनि इन्दुतादात्म्यारोपः उपमां विरुणद्धि । इत्यादि स्वयमूह्यम् । सम्पूर्णमिदं काव्यलक्षणमिति । सम्यक् पूर्णम्-लेशतोऽपि न्यूनताविरहादिति भावः । काव्यं

लक्ष्यते—स्वरूपतो विशेषतश्च ज्ञाप्यतेऽनेनेति काव्यलक्षणम् प्रकृतग्रन्थः समाप्त इत्यर्थः ।

अयमत्र सङ्ग्रहः ।

त्रिभिर्विशेषणैः काव्यं शब्दार्थयुगलं स्मृतम् ।
षट्फलोत्पादकं चास्य कारणं त्रिविधं मतम् ॥ १ ॥
स्वयं चापि त्रिधा प्रोक्तं प्रभेदा बहवो मताः ।
शब्दोऽर्थश्च त्रिधा प्रोक्तो वृत्त्या साऽपि त्रिधा मता ॥ २ ॥
शक्तिरिच्छेश्वरीया सुप्रसिद्धा लक्षणाऽपि च ।
व्यञ्जना तु विदग्धैकवेद्याऽत्र प्रतिपादिता ॥ ३ ॥
षड्विधा लक्षणा चात्र व्यञ्जना बहुधोदिता ।
स्वतःशब्दश्चतुर्धाऽस्याज्जात्यादिः सर्वसम्मतः ॥ ४ ॥
प्रभुसंम्मित इत्यादिशब्दोऽत्र कथितस्त्रिधा ।
नागरादिपदं चापि त्रिधाऽत्रैव प्रदर्शितम् ॥ ५ ॥
परिवृत्तिसहः शब्दः परिवृत्त्यसहस्तथा ।
विभावो द्विविधश्चात्रानुभावा बहुधा मताः ॥ ६ ॥
सञ्चारिणस्त्रयस्त्रिंशद्रसस्तु नवधा स्मृतः ।
रत्यादयः स्थायिभावास्तावन्तोऽष्टौ तु सात्विकाः ॥ ७ ॥
भावोऽथ भावाभासश्च बहुधा समुदाहृतः ।
भावस्य शान्तिरुदयः सन्धिः शबलता तथा ॥ ८ ॥
श्रुतिकट्वादयो दोषाः पदस्योक्ता हि षोडश ।
क्लिष्टादित्रितयं तत्र समस्तस्यैव नान्यथा ॥ ९ ॥
अपास्य च्युतसंस्कारासमर्थौ च निरर्थकम् ।
वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ॥ १० ॥
प्रतिकूलवर्णमुख्या वाक्ये एवैकविंशतिः ।
अर्थदोषा ह्यपुष्टाद्यास्त्रयोविंशतिसङ्ख्यकाः ॥ ११ ॥

रसदोषा दश प्रोक्ताः सर्वे दोषास्तु सप्ततिः ।
माधुर्यौजः प्रसादाख्यास्त्रय एव गुणा मताः ॥ १२ ॥
दिव्यादिभेदात्प्रकृतिः षट्त्रिंशद्धा प्रकीर्तिता ।
वैदर्भीप्रमुखा रीतिस्त्रिधाऽत्रापि प्रदर्शिता ॥ १३ ॥
शब्दालङ्कृतयः षट् च वक्रोक्त्याद्या उदाहृताः ।
अर्थालङ्कृतयस्त्वेकषष्टिसङ्ख्याः प्रकीर्त्तिताः ॥ १४ ॥ इति ।

ननु व्यञ्जनयैव ब्रह्मबोध इत्युक्तम्, तन्न स्पष्टीकृतमिति चेत् । अत्र ब्रूमः । महावाक्यैकवेद्यं ब्रह्मात्म्यैक्यमिति वेदान्तसिद्धान्तः । 'औपनिषदं पुरुषं पृच्छामि' इति श्रुतेः । उपनिषत्प्रधानं च तत्त्वमसीत्यादि महावाक्यमेव, निरवकाशत्वात् । द्वैतन्तु पञ्चकोशादिवदुपायभूतम् । तत्र वाक्यसम्बन्धो लक्षणा । सा च द्विधा—केवललक्षणा लक्षितलक्षणा च । केवललक्षणा त्रिविधा । जहल्लक्षणाऽजहल्लक्षणा जहदजहल्लक्षणा चेति । शक्यार्थपरित्यागेन तत्सम्बन्ध्यर्थान्तरे वृत्तिः जहल्लक्षणा । यथा— 'गङ्गायां घोष' इत्यत्र गङ्गापदस्य तीरे शक्यार्थपरित्यागेन तत्सम्बन्ध्यर्थान्तरे वृत्तिः । अजहल्लणा यथा 'मञ्चाः क्रोशन्ति' इत्यत्र मञ्चपदस्य मञ्चस्थे । शक्यैकदेशपरित्यागेनैकदेशवृत्तिर्जहदजहल्लक्षणा । यथा—'सोऽयं देवदत्त' इत्यत्र सोऽयमिति पदयोरतीतवर्त्तमानकालवैशिष्ट्यपरित्यागेन केवल देवदत्तपिण्डे । एवं तत्त्वमसीत्यत्र तत्त्वंपदयोरीश्वरत्वजीवत्वपरि—त्यागेनाखण्डचैतन्ये जहदजल्लक्षणेति वेदान्तिनः प्रतिपादयन्ति । न चात्र सङ्गे ब्रह्मणि लक्षणायाः सम्भवः, । 'असंयोगोऽयं पुमान्' इति श्रुतेः । किन्तु ब्रह्मात्म्यैक्यबोधिनीवृत्तिर्व्यञ्जनैव । किं तर्हि शङ्करप्रभृतिभिर्महद्भिर्वाच्यार्थपरित्यागेन लक्ष्ये समन्वयोऽङ्गीकृतोऽप्यप्रामाणिकः । क एव शक्नोति वक्तुम्,

किन्तु नैयायिकमीमांसकानुसारेण व्यञ्जनैव तैर्लक्षणापदेन व्यवहृतेति ब्रूमः ।

अद्वैतद्वैतधामप्रकटमधिवसाम्यत्र वेदाः प्रमाणं
सर्वत्र श्रावयित्वा सकलवसु समादाय दूरं पलाय्य ।
वैकुण्ठाधीश्वरोऽभूत्तदखिलवसतिं चोरयित्वा प्रयातो
भूमौ गोपीगृहेभ्यो दधिघृतपटहृद्याति वृन्दावनान्तः ॥
इत्थं कोलाहलेनाकुल इव मुरली बर्हिपत्राणि गुञ्जा-
हारं हृत्वा वनान्तादपगत इह मे स्वान्तमाहर्त्तुकामः ।
प्राणाभ्यन्तर्गतो यो वसति घनतनुः पीतवासाः कुतोऽयं
ग्रन्थस्तेनापहर्तुं निखिलबुधवरोद्दामपाण्डित्यगर्वम् ॥ २ ॥

संदानितकम् ।

राजानो ह्यविवेकिनः क्षितितले प्रायो द्विजाः पण्डितं-
मन्या न स्तुतिमाचरन्ति सुधियां नो वा विदन्ति श्रमम् ।
साकल्यन्तु तथापि गोपशिशुकः कुत्रापि कस्मिंश्चिद-
प्यार्द्रान्तःकरणे करिष्यति सुधासिन्धोः परं सज्जने ॥ ३ ॥
संवद्ब्रह्माश्वमुनिभूज्ञाते मासे मधौ सुदि ।
त्रयोदश्यां सोमवारे समाप्तोऽयं सुधोदधिः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीण-
दीक्षितभीमसेनकृते
काव्यप्रकाशविवरणे सुधासागरे
ऽर्थालङ्कारनिर्णयो नाम
दशम उल्लासः समाप्तः ।

श्रीरस्तु ।

# अथ काव्यप्रकाशोदाहृतपद्यानां वर्णक्रमानुसारिणी सूची ।

| क्रमाङ्कः | पद्यम् | पृष्ठे |
|---|---|---|
| २४ | उपकृतं बहु तत्र | १०६ |
| २६५ | उपपरिसरं गोदावर्याः | ४२२ |
| २१४ | उर्व्यसावत्र तर्वाली | ३७४ |
| १४ | उल्लास्य कालकरवाल० | १७६ |
| ४७१ | ए एहि किंपि कीएवि | ६२० |
| ५५४ | ए एहि दाव सुन्दरि | ६७३ |
| ४७७ | एकस्त्रिधा वसति चेतसि | ६२४ |
| ५१ | एकस्मिन् शयने ( अमरुश० ) | १७१ |
| ४४१ | एतत्तस्य मुखात्कियत् ( भल्लटश० ) | ५९७ |
| १४२ | एतन्मन्दविपक्व० | ३२० |
| ११ | एद्दहमेत्तत्थणिआ | ८१ |
| २३४ | एषोऽहमद्रितनयामुख० ( उदाहरणम् ) | ३९४ |
| ३३९ | एहि गच्छ पतोत्तिष्ठ ( पञ्चतन्त्रम् । व्याख्या०,३ ) | ४८४ |
| १४ | ओण्णिद्दं दोब्बल्लं | ८९ |
| ७० | ओल्लोल्लकरअरअण० | १८५ |
| ३३० | औत्सुक्येन कृतत्वरा ( रत्नावली ) | ४७३ |
| २२४ | कः कः कुत्र न घुर्घुरायित० | ३८३ |
| ४५ | कण्ठकोणविनिविष्टमीश ( उत्पलः ) | १६४ |
| १२४ | कथमवनिप दर्पो | २९० |
| ५५२ | कपाले मार्जारः पय० ( शार्ङ्ग०-भासः ) | ६७१ |
| ४४८ | कमलमनम्भसि | ६०४ |
| (सू०) | कमलमिव मुखं | ५३४ |
| ४१५ | कमलेव मतिर्मतिरिव | ५७१ |
| ५५१ | करजुअगहिअजसोआ | ६७७ |
| ३९९ | करवाल इवाचारस्तस्य | ५६० |
| १९१ | करवालकरालदोःसहायो० | ३५९ |
| ३०३ | करिहस्तेन सम्बाधे | ४२२ |
| ४७५ | कर्पूर इव दग्धोऽपि ( बालरामायणम् ) | ६२३ |
| ३२५ | कर्पूरधूलिधवल० | ४६६ |
| ५१२ | कलुषं च तवाहितेष्व० | ६४३ |

इति ।

## द्रष्टॄणां सौगमाय मुद्रणानन्तरमुपलब्ध-(ख) चिन्हितपुस्तकस्थपाठावत्र प्रकाश्येते ।

७९ पृष्ठे १२ पङ्क्तिमारभ्य (ख) चिन्हितपुस्तके उपलब्धः पाठः ।

मुरारिमिश्रास्तु—लक्ष्यप्रतीतेर्न शैत्यप्रतीतिः फलं किन्तु शक्यसम्बन्धरूपं लक्षणायास्तथा च न किञ्चिद्दूषणमिति। अत्रार्वाचीनाः—अन्वयानुपपत्त्या हि लक्षणा प्रसरति, यावदन्वयोपपादकं तावदेव विषयीकरोति न त्वनौपयिकमपीति कथं पावनत्वमपि विषयीकुर्यात । नन्वन्वयानुपपत्त्या कल्प्यमानाऽपि साऽनुद्देश्यमपि शैत्यं विषयीकरोतु । यथा तापोपशमायोपादीयमानं चन्दनं शैत्यमपि जनयतीति चेन्न । चन्दनस्य सन्निधिमात्रेण शैत्यजनकत्वं, लक्षणायास्तु अनुपपत्तिप्रसारितयेति वैषम्यादिति दूषणमाहुः । अत्रोक्तं जयरामन्यायपञ्चाननैः—'यष्टीः प्रवेशय' इत्यादाविव तात्पर्यान्वयानुपपत्त्या शैत्यादिविशिष्टोपस्थापने बाधकाभावान्मुरारिमते न दूषणमिति । तत्प्रामादिकम्, मुख्यार्थबाधासम्भवे तात्पर्यान्वयानुपपत्त्यनुसरणादिति सुधीभिर्ध्येयम् । यतूक्तं यथाश्रुते चण्डीदासभट्टाचार्यैः—ज्ञानस्य विषयातिरिक्तं फलमात्रं वा विवक्षितं ज्ञेयगतं वा, आद्ये प्रकृतेऽप्यस्ति गोस्वामिगतप्रीतिः, अन्त्ये प्रयोजनज्ञाने एव व्यभिचारः। तेन हि गोस्वामिसन्तोषमात्रं जन्यते न तु तद्गतं किञ्चिदिति । तस्माद्धेतुफलयोस्तत्प्रतीतिफलप्रतीत्योर्भिन्नकालत्वेनाभिन्नव्यापारविषयत्वमसमीचीनमेवेति व्यञ्जनासिद्धिरित्यत्र तात्पर्यमिति । तदबोधविजृम्भितम् । न ह्यनेन सूत्रेण यथाश्रुतेनापि ज्ञानत्वस्य विषयान्यफलत्वव्याप्यत्वं प्रतिपाद्यते, किन्तु ज्ञानफलत्वस्य विषयान्यत्वव्याप्यत्वं, तथा च शैत्यादेर्लक्षणाजन्यप्रतीतिविषयत्वे तत्प्रयोजनं न स्यादित्यर्थे दोषानवकाशस्तस्मादुक्तविकल्पादेरप्युपयोग इति भावः ।

वयन्तु ब्रूमः—विशिष्टं लक्ष्यन्तदा भवेद्यदि विशिष्टत्वे लक्ष्यतावच्छेदकं पूर्वप्रतीतं सम्भवेत, न त्वेवं पावनत्वादिविशिष्ट

वैशिष्ट्यस्य तटे प्रमाणान्तरागोचरत्वात्, तत्र तस्याभावात् । यदुक्तवान्, 'योगः फलेन नो' इति। अयमाशयः—पावनत्वादिकं न लक्ष्यं किन्तु तीरत्वादिवल्लक्ष्यतावच्छेदकं वाच्य, न चैतत्सम्भवति, तट-त्वादिविशिष्टे इव गङ्गादिनिष्ठपावनत्वादिविशिष्टे तटादौ शक्यस-म्बन्धस्य पूर्वमगृहीतत्वात्, बाधिते पावनत्वादौ प्रत्यक्षादेरसाम-र्थ्यात्, व्यञ्जनामात्रगोचरत्वात्तेषाम् । किं बहुना, गौर्वाहिक इत्या दौ गवाभिन्नजन्तुत्वादिनापि लक्षणाया असम्भवो बोध्यः, कथञ्चि त्सम्भवेऽपि तत्र वाहिकत्वविशिष्टे गवाभेदो व्यञ्जनैकगम्य एवेति दिक् । अथ पावनत्वादिसामान्यवैशिष्ट्यमेव लक्ष्यतावच्छेदकमस्तु, तस्य प्रतीतत्वादिति चेत्तर्हि पावनत्वादिविशेषो न प्रतीयेत् ।

११६ पृष्ठे १४ पङ्क्तिमारभ्योपलब्धः पाठः ।

अनन्तरावतीर्णा बाधा तु मिथ्याधीः । यथौत्तरकालिके न रामो-यमिति बाधे रामोऽयमिति । विरुद्धोभयकोटिका तु संशयः । यथा-ऽयं रामो न वेति । वृत्तौ भावाभावयोर्निश्चयस्य सन्देहो निश्चयसं-शयशब्देन विवक्षितो न तु प्रतीतिद्वयमिति बोध्यम् । सदृशोभयवि-षया धीः सादृश्यधीः, यथा रामसदृशोऽयमिति, ताभ्यो लोकप्रसि-द्धाभ्यश्चतसृभ्यः प्रतीतिभ्यो विलक्षणा या चित्रे तुरगोऽयमिति बुद्ध्या प्रथमं पक्षभूतो नटो विषयीक्रियते इति । न च नटे रामोऽय-मिति मतिरपि मिथ्यैवेति कथं तद्वैलक्षण्यमिति शङ्क्यम्, बाधशि-रस्काया एवात्र मिथ्यात्वात्, प्रकृते च बाधानवतारात्, तदवतारे तद्रूपेणापेक्षत्वायोगात् । ततस्तत्राविद्यमानमपि विभावादित्रयमव गम्यते, कुतः पूर्वमेवेत्यादि ।

# टीकायामुल्लिखितानां ग्रन्थकर्तॄणां नामानि ।

१ श्रीवत्सलाञ्छनभट्टाचार्याः
२ गोविन्दमहामहोपाध्यायाः
३ प्रदीपकाराः
४ सुबुद्धिमिश्राः
५ जयरामन्यायपञ्चाननाः
६ अप्पयदीक्षिताः
७ वैद्यनाथाः
८ पक्षधरमिश्राः
९ चण्डीदासभट्टाचार्याः
१० सारबोधिनीकाराः
११ रविभट्टाचार्याः
१२ देवनाथतर्कपञ्चाननाः
१३ महेशाः
१४ मधुमतीकाराः
१५ चक्रवर्तिनः
१६ वाचस्पतिमिश्राः
१७ नृसिंहठक्कुराः
१८ भास्करभट्टाचार्याः
१९ रत्नपाणिभट्टाचार्या
२० महिमभट्टाः
२१ महाराजाः
२२ वामनः
२३ रुद्रभट्टः ।

# शुद्धिपत्रम् ॥

| अशुद्धम् । | शुद्धम् । | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| स्नानर्यत्व | स्नानकार्यत्व | ३१ | १८ |
| अरिद्राः | अदरिद्राः । | ४० | १६ |
| अर्थान्तख्यञ्जना | अर्थान्तरव्यञ्जना | ४६ | ९ |
| स्वैरविहारत्वात् | स्वैरविहारत्वात् । | ४६ | ९४ |
| प्रशनम् | प्रकाशनम् । | ४८ | २१ |
| इति व्यङ्ग्यम् | इति लक्ष्यम्, तेनकामुक- विषयं सापराधत्वप्र- काशनं व्यङ्ग्यम् । | ” | २४ |
| सङ्केत्त | सङ्केत । | ५० | १५ |
| स्यत् | स्यात् । | ५३ | २४ |
| पदोद्देश्या | पदोद्देश्यस्य | ५६ | १० |
| समवेतत्वे | समवेतत्वम् । | ५७ | ११ |
| अश्रय | आश्रय | ६० | १४ |
| प्रत्ययोत्पतिः | प्रत्ययोत्पत्तिः | ६१ | ९ |
| सक्षात् | साक्षात् | ६४ | ५ |
| उपापादयति | उपपादयति | ७७ | २ |
| ध्येम् | ध्येयम् | ८८ | १२ |
| प्रच्छन्नकामुः | प्रच्छन्नकामुकः | ९६ | १७ |
| अकृतम् | अपकृतम् | १०७ | १४ |
| चवर्णा | चर्वणा | ११७ | २४ |
| ” | ” | ११९ | ५ |
| सविककल्पत्वम् | सविकल्पकत्वम् | १२९ | २२ |
| तिर्यक्कोद्दीपन | तिर्यक्चोद्दीपन | १३२ | २१ |
| निराकुर्वन् | निराकुर्वन् | १३८ | ४ |
| रतेरेव | रतेरेव | १४० | १५ |
| शरपन्तत् | शरपतनात् | १५५ | १२ |

# शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| अनुषध्यदेशे | अनुषङ्गो बोध्यः, अन्यथा समदृष्टित्वासङ्गतेः, कचिदमेध्यदेशे, | १६३ | ९ |
| तूर्णा | तूष्णीम् | १७१ | ९ |
| शय्यायम् | शय्यायाम् | १७२ | २० |
| मनाहरम् | मनोहरम् | १७४ | ७ |
| भाणितेन | भणितेन | १८७ | १० |
| वेणनाम् | वेणूनाम् | १९० | २५ |
| भवदुभयोः | भवेदुभयोः | १९१ | २१ |
| तदृश | तादृश | २०७ | ८ |
| व्यापरे | व्यापारे | २१८ | ७ |
| निइताः | निहताः | २२९ | ३ |
| चाचतन | चाचेतने | २३६ | १० |
| प्रकारण | प्रकरण | २४७ | ४ |
| प्राधन्यात् | प्राधान्यात् | २५० | ६ |
| आकङ्क्षा | आकाङ्क्षा | २६३ | १६ |
| ऐन्द्रचा | ऐन्द्रया | २७६ | २५ |
| शुन्धन्धम् | शुन्धध्वम् | २८४ | २० |
| पौरोडाशकम् | पौरोडाशिकम् | २८५ | १५ |
| व्यजना | व्यञ्जना | २८८ | २० |
| रोमोऽस्मि | रामोऽस्मि | २९५ | १० |
| प्रकण | प्रकरण | २९६ | १६ |
| दक्षिनयन | दक्षिणनयन | ३०० | १४ |
| सम्बन्सम्बन्धा | सम्बन्धसम्बन्धो | ३०१ | १९ |
| भमणम् | भ्रमणम् | ३०४ | १ |
| भ्रमति | भ्रमेति | ३०५ | २१ |
| विरहोत्तम्यत् | विरहोत्ताम्यत् | ३१२ | ७ |
| अनुसन्ध्वान | अनुसन्धान | ३२६ | १ |
| अर्थातन् | अर्थान्तरं | ३२८ | ८ |
| चिताग्नित्यप्र | चिताग्निरित्य | ३५२ | १, |

# शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| धम्मिलस्य | धाम्मिल्लस्य | ३५४ | ६ |
| प्रयोगदर्थं | प्रयोगादर्थं | ३५६ | २० |
| न्जियः | विजयः | ३६७ | ९ |
| विश्लोषो | विश्लेषो | ३७२ | १० |
| कातितयेम् | कीर्तितयम् | ३७९ | २२ |
| युवामेथ | युवामेव | ३८७ | २१ |
| त्वमेवनुभव | त्वमेवमनुभव | ३८८ | १ |
| अश्नंत | अश्नुते | ४०९ | ९ |
| कामत्य | कामस्य | ४२२ | १ |
| उपरिसर | उपपरिसर | ११ | १९ |
| नुरालङ्कथ | न्नुल्लङ्कथ | ४२८ | १८ |
| दर्शमुखो | दशमुखो | ४३२ | २ |
| कणिकायानम् | कणिकापानम् | ४३७ | २५ |
| सुवुमिद्धिश्र | सुबुद्धिमिश्र | ४३८ | ३ |
| प्रकराण | प्रकरण | ४४८ | २४ |
| खडित | खण्डित | ४४९ | १२ |
| मधुयर्द्यो | माधुयार्द्यो | ४९० | २२ |
| काव्यशोभासाः | काव्यशोभायाः | ४९६ | ६ |
| वचिव्यमात्र | वैचित्र्यमात्र | ५०२ | १३ |
| त्यागादव | त्यागादेव | ११ | १६ |
| वैकल्यं | वैकल्यं | ५०८ | २३ |
| उत्पमा | उत्तमा | ५१६ | २१ |
| पूर्वणैव | पूर्वैणैव | ५१८ | १० |
| यध्यादि | मध्यादि | ५२० | ११ |
| नात्ययम् | यात्ययम् | " | २० |
| गुणवाचकाया | गुणवाचकतया | ५३१ | १ |
| उपरसाम्मुख्यं | उपकारसाम्मुख्य | ५३१ | १ |
| सुष्टु | सुष्ठु | ५४६ | ६ |
| उपमानानि | उपमानानि | ५६२ | ९ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| तरोमान | तरोपमान | ५७२ | ३ |
| ज्योत्स्नी | ज्योत्स्नां | ५७८ | १३ |
| अन्तर्धा | अन्तर्धान | ,, | २५ |
| अन्यया | अन्यथा | ५८५ | २४ |
| रतण | तरण | ५९४ | ३ |
| मथादि | मर्यादि | ६०४ | १५ |
| निर्देशे | निर्देशे | ६०९ | ९ |
| कृपपणानां | कृपणानाम | ६११ | १२ |
| नालनात्व | नलिनीत्व | ६२६ | २३ |
| वाक्यलिङ्ग | काव्यलिङ्गं | ६२५ | २३ |
| विषस्यैव | विषयस्यैव | ६३९ | १६ |
| गगनले | गगनस्थले | ७०६ | १३ |